वाक्यार्थं च वाक्यभागं वाक्यार्थभागस्य वाचकमिति च तत्तद्वाक्यार्थभागप्रतीतेस्तत्तद्वाक्यभागान्वयव्यतिरेकाभ्यां परिकल्प्य कार्यान्वयान्वयीति वस्तुनि शब्दशक्तिं वेत्ति स्वयमेव व्युत्पादनानपेक्षया प्रत्यक्षादिवन्धनस्वव्यवहारदृष्टान्तेनान्वयव्यतिरेकाभ्यां कार्यकारणभावग्रहणकौशलेन वेत्ति । तत्र यौ वाक्यभागस्य पदस्यान्वयव्यतिरेकानुविधायिनौ वाक्यार्थभागस्यान्वयव्यतिरेकौ तौ कार्यान्वयविशिष्टस्य न गवाद्यर्थमात्रस्य । यतो गामानयेति वाक्ये गोपदस्योद्धारेऽश्वपदस्य वाऽन्वये कार्यान्वितस्यैव गोरुद्धारः। आवापश्चाश्वस्य । कार्यान्वितस्यैव गोरुद्धारे तद्गतकार्यान्वयस्याप्युद्धारादश्वावापे वाऽश्वगतकार्यान्वयस्याऽऽवापात् । तथाच कार्यान्वितार्थे सर्वस्य शक्तिरिति निश्चीयते । अत्र कार्यान्वितार्थत्वं शब्दसामर्थ्यप्रतियोगित्वप्रयोजकमिति स्वीकारे कार्यवाचिपदस्य लिङादेः कार्यान्वितार्थवाचकत्वं कार्यान्तराभावान्न संभवतीति तत्र स्वार्थेऽन्विते वा शक्तिरभ्युपेया स्यात्तथाच प्रयोजकद्वैरूप्यमेष्टव्यं स्यात्तन्मा भूदिति प्रयोजकैकरूप्यसिद्ध्यर्थमाह—**कार्यान्वयान्वयिनीति** । कार्यप्रतियोगिको योऽन्वयस्तस्यान्वयि कार्यमन्यद्वा तस्मिञ्शब्दशक्तिरिति प्रयोजकैकरूप्यसिद्धिरित्यर्थः ॥ १३० ॥

ननु कार्यनिरूपितान्वयावच्छिन्नेऽन्वयिनि शब्दशक्तिरिति वदता कार्यत्वावच्छिन्ने कार्ये शक्तेरभ्युपेयत्वात्स्वेनैव स्वस्य निरूपणं कार्यस्यायुक्तं कल्पनीयं स्यादिति चेत्तत्राऽऽह—**त्यक्त इति** । कार्यान्वितार्थे शब्दशक्तिरित्ययं पक्षः परित्यक्तस्तर्हि किं योग्येतरान्विते शब्दशक्तिमाश्रयामि नैवमित्याह—**नोक्त इति** । अयं हि पक्षः पूर्वमप्यनुक्तो मयाऽयोग्येन धेतरेण वाऽन्वयस्याप्रसक्तेः । व्यवच्छेद्याभावे योग्यताविशेषणस्य वैयर्थ्यात् । कार्यान्विते शब्दशक्तिरिति पूर्वमुक्तं सिद्धान्विते शब्दशक्तिरित्यस्य पक्षस्य व्यवच्छेदाय । सोऽपीदानीं त्यक्तस्त्वच्छ्रद्धानुरोधादित्यर्थः । तर्हि कथमभ्युपगम इति चेत्तदाह—**किं तु स्यादिति** । अस्य शब्दस्य शक्तिर्निजस्वभाववशादन्वितस्वार्थ इत्यर्थः । तर्हि सिद्धान्वितेऽपि शब्दशक्तिरभ्युपेता नेत्याह—**योग्यत्वादेस्त्विति** । न हि सिद्धस्य सिद्धेनान्वययोग्यता कार्यस्य वा कार्येणाऽऽकाङ्क्षा वा समस्वभावतया परस्परमुपयोगाभावात् । किं तु सिद्धकार्ययोरेव निर्वर्त्यनिर्वर्तकभूतयोरन्वययोग्यताकाङ्क्षा च तयोश्चान्वयः कार्यप्रधान इति कार्यैदमर्थ्यं विशिष्टकार्यपरत्वं वाक्यस्य सिद्धमित्यर्थः ॥ १३१ ॥

श्लो० १४१. पं० १४५—

उपसंहरति—**एवमिति** । एवं बहुन्यायापेक्षत्वेऽपि शीघ्रमेव व्युत्पत्तिर्भवतीत्याह—**कतिपयैर्वासरैरिति** । स्वतःप्रामाण्याद्बालानामवक्रबुद्धित्वाद्बुभुत्सुत्वाच्चैतादृशमन्वयव्यतिरेककौशलं क्षिप्रमेव भवतीति भावः । एवं कार्यान्विते शब्दशक्तिकथनेन किं प्रकृत इति तदाह—**तस्मादिति** ॥ १४१ ॥

श्लो० १५६ पे० १५५—

**सोऽयमितीति**। उभयप्रकारा जहदजहद्रूपा। तदेवोपपादयति—**देशादीति**। तदेतद्देशकालवैशिष्ट्यरूपभागवर्जनात्। केवलं यथा स्यात्तथा तदिदंपदाभ्यां पुंस उपात्ततया चेत्यर्थः। उपसंहरति—**एवं त्रिधेति**। गङ्गायां घोष इत्यत्र हि वस्तुतो गङ्गासंबन्धि यत्तीरं घोषान्वययोग्यं तदेव लक्षणया प्रतीयते न तु गङ्गाविशिष्टतीरम्। तस्य तेन रूपेणान्वयायोग्यत्वात्। अतो गङ्गापदे जहल्लक्षणैव। एवं वहिः शोणस्तिष्ठतीत्यादौ निष्कृष्टद्रव्यगुणमात्रस्य वहिर्देशस्थित्यनुपपत्तेः शोणगुणविशिष्टस्यैवाश्वस्य नियमेन स्थित्यवगमात्साऽजहल्लक्षणा स्वार्थमुपादायैव तस्य द्रव्ये वृत्तेः। सोऽयमित्यादौ प्रागुक्तन्यायेनाभेदविरुद्धदेशादिपदार्थभागं परित्यज्य धर्मिस्वरूपं पदार्थभागमुपादायेदं वाक्यमभेदं प्रतिपादयतीति तत्र सा जहदजहद्रूपेति लाक्षणिकी वृत्तिस्त्रिधा भवतीत्यर्थः॥ १५६॥

श्लो० १६१ पे० १६२—

**आदेयांश इति**। आदेयांशे लक्ष्यांशे त्वयद्वयात्मप्रकाश आत्मस्वरूपे ब्रह्मणीतियावत्। यद्यप्येवमुक्तप्रकारेण पदार्थयोरणुमात्रोऽपीषन्मात्रमपि केनाप्यंशेनेति यावत्। भेदो नास्ति तथाऽपि यस्माच्छब्दौ तत्त्वंपदात्मकौ वाच्यं लक्ष्यार्थवहिर्भूतं भिन्नं मिथो व्यावृत्तं हेतुं शब्दप्रवृत्तिनिमित्तकं कार्यकारणत्वलक्षणमादाय वर्तेते तस्मात्पदयोर्जामिता पुनरुक्तता पर्यायत्वापत्तिर्नास्ति। अतो नोक्तदोषद्वयस्याप्यत्रावकाश इत्यर्थः। लक्ष्यार्थभेदाभावेऽपि वाच्यार्थभेदात्पदभेदः प्रवृत्तिनिमित्तभेदाद्व्यावर्त्यभेदाच्च न पौनरुक्त्यमिति भावः॥ १६१॥

श्लो० १६४ पे० १६५—

**प्रथमचरमेति**। प्रथमपदमसंजातविरोधितया मुख्यार्थमेव चरमं तु पदं मुख्यार्थांशे तद्विरोधाल्लक्षणामर्हतीत्यस्यार्थस्य न्यायसिद्धत्वात्प्रथमचरमभाव एवैकपदलक्षणानिर्णये कारणमिति चेदिति शङ्काभागयोजना। अतिप्रसक्तत्वेन निराकरोति—**अयमपीति**। अस्य पदप्रयोगे प्रथमचरमभावस्यान्यथादर्शनमेव वेदगतमुदाहृत्य विशदयति—**चरमपठितमिति**। तत्पदमित्यसंसारिवस्तुविषयं पदमितियावत्। अध्वर्युवेदो यजुर्वेदः। तत्र हि 'अहं ब्रह्मास्मि' (बृ० १।३।१०) इति संसारिविषयं पदं प्रथमं पठ्यत इत्यतोऽत्र पाठनियमाभावात्तदनुरोधे चाव्यवस्थितार्थमिदं वाक्यं स्यादित्यर्थः॥ १६४॥

श्लो० १९६ पे० १८७—

प्राथम्यभाक्प्रथमप्रतीतिविषय इत्यर्थः। विशेषणेतरयाऽन्वय इत्यनुषङ्गः। विरोधोद्भवो विरोधस्फुरणम्। उत्पन्ने च विरोधे तत्परिहारेणैकरसक इति योज्यम्॥ १९६॥

**श्लो० २०३ पे० १९२—**

कथं युक्तं न प्रतिभातीत्यपेक्षायामाद्यं पक्षमनूद्य दोषमाह—**संबन्धिरूपमिति** । संबन्ध्याकारवत्तया लक्ष्यत्वे लक्षणया विशिष्टविषयत्वादखण्डवाक्यार्थसिद्धिर्दूरापास्तेत्यर्थः । द्वितीयं प्रत्याह—**अनन्वितमिति** । लोके वाच्यार्थासंबद्धे लक्षणायाऽदर्शनाद्वेदेऽपि तत्र सा न युक्तेत्यर्थः ॥ २०३ ॥

# संक्षेपशारीरकस्य श्लोकाद्यचरणप्रतीकवर्णानुक्रमः ।

समाप्तोऽयं संक्षेपशारीरकस्य श्लोकाद्यचरणप्रतीकवर्णानुक्रमः ।